# Kalabhairava sahasranAma stotram

# कालभैरवसहस्रनामस्तोत्रम्

## Document Information



Text title : kAlabhairava sahasranAma stotram

File name : kAlabhairavasahasra.itx

Category : sahasranAma, shiva, stotra

Location : doc_shiva

Author : Traditional

Transliterated by : Ravin bhalekar ravibhalekar at hotmail.com

Proofread by : Ravin bhalekar ravibhalekar at hotmail.com

Description-comments : uDDAmaretantre umAmaheshvarasa.vAde

Latest update : November 26, 2006, December 25, 2019

Send corrections to : Sanskrit@cheerful.com



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

December 25, 2019

*sanskritdocuments.org*



# कालभैरवसहस्रनामस्तोत्रम्



श्री गणेशाय नमः ।
कैलासशिखरे रम्ये देवदेवं जगद्गुरुम् ।
पप्रच्छ पार्वतीकान्तं शङ्करं लोकनायकम् ॥ १॥

पार्वत्युवाच ।
देवदेव महादेव सर्वज्ञ सुखदायक ।
आपदुःखदारिद्र्यादि पीडितानां नृणां विभो ॥ २॥

यद्वित्तं सुखसम्पत्तिधनधान्यकरं सदा ।
विशेषतो राजकुले शान्ति पुष्टि प्रदायकम् ॥ ३॥

बालग्रहादि शमनं नाना सिद्धिकरं नृणाम् ।
नोक्तपूर्वश्चयन्नाथ ध्यानपूजा समन्वितम् ॥ ४॥

वक्तुमर्हस्य शेषेण ममानन्द करं परम् ।
ईश्वर उवाच ।
स्तवराजं महामन्त्रं भैरवस्य शृणु प्रिये ॥ ५॥

सर्वकामार्थदं देवि राज्यभोगप्रदं नृणाम् ।
स्मरणात्स्तवराजस्य भूतप्रेत पिशाचकाः ॥ ६॥

विद्रवन्त्यभितोभिताः कालरुद्रादिवप्रजाः ।
एकतः पन्नगाः सर्वे गरुडश्चैकतस्तथा ॥ ७॥

एकतो घनसङ्घाताश्चण्डवातोयथैकतः ।
एकतः पर्वताः सर्वे दम्भोलिस्त्वेकस्तथा ॥ ८॥

एकतो दैत्यसङ्घाताह्यकतः स्यात्सुदर्शनम् ।
एकतः काष्ठ सङ्घाता एकतोग्निकणोयथा ॥ ९॥

घनान्धकारस्त्वेकत्र तपनस्त्वेकतस्तथा ।

तथैवास्य प्रभावस्तु स्मृतमात्रे न दृश्यते ॥ १०॥

स्तवराजं भैरवस्य जपात्सिद्धिमवाप्नुयात् ।
लिखित्वायद्गृहे देवि स्थापितं स्तवमुत्तमम् ॥ ११॥

तद्गृहं नाभिभूयेत भूतप्रेतादिभिर्ग्रहैः ।
साम्राज्यं सर्वसम्पत्तिः समृद्धि लभ्यते सुखम् ॥ १२॥

तत्कुलं नन्दते पुंसाम्पुत्रपौत्रादिभिर्ध्रुवम् ।
पार्वत्युवाच ।
यस्त्वया कथितो देव भैरवः स्तोत्रमुत्तमम् ॥ १३॥

अगण्य महिमा सिन्धुः श्रुतो मे बहुधा विभो ।
तस्य नामान्यनन्तानि प्रयुतान्यर्बुदानि च ॥ १४॥

सन्ति सत्यं पुरा ज्ञातं मया वै परमेश्वर ।
सारात्सारं समुधृत्य तेषु नाम सहस्रकम् ॥ १५॥

ब्रूहि मे करुणाकान्त ममानन्द वर्द्धन ।
यन्नित्यं कीर्तयेन्मर्त्यः सर्वदुःखविवर्जितः ॥ १६॥

सर्वान्कामान्वाप्नोति सर्वसिद्धिश्च विन्दति ।
साधकः श्रद्धयायुक्तः सर्वाधिक्योर्कसद्युतिः ॥ १७॥

अप्रधृष्यश्च भवति सङ्ग्रामाङ्गण मूर्द्धति ।
नाग्निचोरभयं तस्य ग्रहराज भयं न च ॥ १८॥

न च मारी भयं तस्य व्याघ्रचोरभयं न च ।
शत्रुणां शस्त्रसङ्घाते भयं क्वापि न जायते ॥ १९॥

आयुरारोग्यमैश्वर्यं पुत्र पौत्रादि सम्पदः ।
भवति कीर्तनाद्यस्यत्ब्रूहि करुणाकर ॥ २०॥

ईश्वर उवाच ।
नाम्नां सहस्रं दिव्यानं भैरवस्य भवत्कृते ।
वक्ष्यामि तत्वतः सम्यक् सारात्सारतरं शुभम् ॥ २१॥

सर्वपापहरं पुण्यं सर्वोपद्रव नाशनम् ।
सर्वसम्पत्प्रदं चैव साधकानं सुखावहम् ॥ २२॥

सर्व मङ्गलमाङ्गल्यं सर्वव्याधिनिवारणम् ।

आयुःकरं पुष्टिकरं श्रीकरं च यशस्करम् ॥ २३॥

भैरव स्तवराजस्य महादेव ऋषिः स्मृतः ।
भैरवोदेवताऽनुष्टुप्छन्दश्चैव प्रकीर्तितम् ॥ २४॥

सर्वकार्यप्रसिद्ध्यर्थं प्रीतये भैरवस्यहि ।
करिष्ये हं जपमिति सङ्कल्प्यादौपुमान्सुधीः ॥ २५॥

ऋषिः शिरसि विन्यस्य छन्दस्तु मुखतो न्यसेत् ।
देवतां हृदयेन्यस्य ततो न्यासं समाचरेत् ॥ २६॥

भैरवं शिरसिन्यस्य ललाटे भीमदर्शनम् ।
नेत्रयो भूतहननं सारमेयानुगं भ्रुवौः ॥ २७॥

कर्णयोर्भूतनाथं च प्रेतवाहं कपोलयोः ।
नासापुटोष्ठयोश्चैव भस्माङ्गं सर्वभूषणम् ॥ २८॥

अनादिभूतमास्ये च शक्ति हस्तङ्गले न्यस्येत् ।
स्कन्धयेर्दैत्यशमनं बाव्होरतुलतेजसम् ॥ २९॥

पाण्योः कपालिनं न्यस्य हृदये मुण्डमालिनम् ।
शान्तं वक्षस्थले न्यस्य स्तनयोः कामचारिणम् ॥ ३०॥

उदरे च सदातुष्टं क्षेत्रेशं पार्श्वयोस्तथा ।
क्षेत्रपालं पृष्ठदेशं  क्षेत्रेज्ञं नाभिदेशके ॥ ३१॥

पापौघनाशं कट्यां बटुकं लिङ्गदेशके ।
गुदे रक्षाकरं न्यस्य तथोर्वो रक्तलोचनम् ॥ ३२॥

जानुनीर्घुर्घुरारावं जङ्घयो रक्तपायिनम् ।
गुल्फयोः पादुपासिद्धिं पादपृष्ठे सुरेश्वरम् ॥ ३३॥

आपादमस्तकं चैव आपदुद्धारकं न्यसेत् ।
पूर्वे डमरुहस्तं च दक्षिणे दण्डधारिणम् ॥ ३४॥

खड्गहस्तं पश्चिमे च घण्टावादिनमुत्तरे ।
आग्नेयामग्निवर्णं च नैरृत्ये च दिगम्बरम् ॥ ३५॥

वायव्ये सर्वभूतस्थमीशान्येचाष्टसिद्धिदम् ।
ऊर्ध्वं खेचरिणं न्यस्य पाताले रौद्ररूपिणम् ॥ ३६॥

एवं विन्यस्य देवेशी षडङ्गेषु ततो न्यसेत् ।
हृदये भूतनाथाय आदिनाथायमूर्द्धनि ॥ ३७॥

आनन्दपदपूर्वायनाथायाथ शिखालये ।
सिद्धिशाम्बरनाथाय कवचे विन्यस्येत्तथा ॥ ३८॥

सहजानन्दनाथायन्यसेन्नेत्रत्रये तथा ।
निःसीमानदनाथाय अस्त्रे चैव प्रयोजयेत् ॥ ३९॥

एवं न्यासविधिं कृत्वा यथावत्तदनन्तरम् ।
ध्यानं तस्य प्रवक्ष्यामि यथा ध्यात्वा पठेन्नरः ॥ ४०॥

शुद्धस्फटिकसङ्काशं सहस्रादित्यवर्चसम् ।
नीलजीमूतसङ्काशं नीलाञ्जनसमप्रभम् ॥ ४१॥

अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ।
दशबाहुमथोग्रं च दिव्याम्बर परिग्रहम् ॥ ४२॥

दंष्ट्राकरालवदनं नूपुरारावसङ्कुलम् ।
भुजङ्गमेखलं देवमग्निवर्णं शिरोरुहम् ॥ ४३॥

दिगम्बरमाकुरेशं बटुकाख्यं महाबलम् ।
खट्वाङ्गमशिपाशं च शूलं दक्षिणभागतः ॥ ४४॥

डमरुं च कपालं च वरदं भुजगं तथा ।
आत्मवर्णसमोपेतं सारमेय समन्वितम् ॥ ४५॥

एवं ध्यात्वा सु सन्तुष्टो जपात्कामान्मवाप्नुयात् ।
साधकः सर्वलोकेषु सत्यं सत्यं न संशयः ॥ ४६॥

आनन्द सर्वगीर्वाण शिरोशृङ्गाङ्ग सगिनः ।
भैरवस्य पदाम्भोजं भूयस्तन्नौमि सिद्धये ॥ ४७॥

ॐ भैरवो भूतनाथश्च भूतात्मा भूतभावनः ।
भूतावासो भूतपतिर्भूरिदो भूरिदक्षिणः ॥ ४८॥

भूताध्यक्षो भूधरेशो भूधरो भूधरात्मजः ।
भूपतिर्भास्करि भीरुर्भीमो भूतिर्विभूतिदः ॥ ४९॥

भूतो भूकम्पनो भूमिर्भौमो भूताभिभावकः ।
भगनेत्रोभवोभोक्ता भूदेवो भगवानभीः ॥ ५०॥

भस्मप्रियो भस्मशायी भस्मोद्धूलितविग्रहः ।
भर्गः शुभाङ्गो भव्यश्चभूतवाहनसारथिः ॥ ५१॥

भ्राजिष्णुर्भोजनम्भोक्ता भिक्षुर्भक्तिजनप्रियः ।
भक्तिगम्यो भृङ्गिरिटिर्भक्त्या वेदितविग्रहः ॥ ५२॥

भूतचारी निशाचारी प्रेतचारी भयानकः ।
भावात्मा भूर्भुवोलक्ष्मीर्भानुर्भीमपराक्रमः ॥ ५३॥

पद्मगर्भो महागर्भो विश्वगर्भाः स्वभूरभूः ।
भूतलोभुवनाधिशो भूतिकृद्भ्रान्तिनाशनः ॥ ५४॥

भूतिभूषितसर्वाङ्गो भूशयोभूतवाहनः ।
क्षेत्रज्ञः क्षेत्रपालश्च क्षेत्रविघ्ननिवारणः ॥ ५५॥

क्षान्तः क्षुद्रः क्षेत्रपश्च क्षुद्रघ्नः क्ष्वियः क्षमी ।
क्षोभणो मारणस्तम्भी मोहनो जृम्भणो वशी ॥ ५६॥

क्षेपणः क्षान्तिदः क्षामः क्षमाक्षेत्रं क्षरोक्षरः ।
कङ्कालः कालशमनः कलाकाष्टातनुः कविः ॥ ५७॥

कालः कराली कङ्काली कपाली कमनीयकः ।
कालकालः कृत्तिवासाः कपर्दी कामशासनः ॥ ५८॥

कुबेरबन्धुः कामात्मा कर्णिकारप्रियः कविः ।
कामदेवः कामपालः कामीकान्तः कृतागमः ॥ ५९॥

कल्याणः प्रकृतिः कल्पः कल्पादिः कमलेक्षणः ।
कमण्डलुधरः केतुः कालयोगीत्वकल्मषः ॥ ६०॥

करणं कारणंकर्ता कैलासपतिरीश्वरः ।
कामारिः कश्यपोनादि किरीटी कौशिकस्तथा ॥ ६१॥

कपिलः कुशलः कर्ताकुमारः कल्पवृक्षकः ।
कलाधरः कलाधीशः कालकण्ठः कपालभृत् ॥ ६२॥

कैलासशिखरावासः क्रूरः किर्तिविभूषणः ।
कालज्ञानी कलिघ्नश्च कम्पितः कालविग्रहः ॥ ६३॥

कवची कञ्चुकी कुण्डी कुण्डली कर्यकोविदः ।

कालभक्षः कलङ्कारिः किङ्किणीकृतवासुकिः ॥ ६४॥

गणेश्वरश्च गौरीशो गिरिशो गिरिबान्धवः ।
गिरिधन्वा गुहो गोप्ता गुणराशिर्गुणाकरः ॥ ६५॥

गम्भीरो गहनो गोसागोमानूमन्ता मनोगतिः ।
श्रीशो गृहपतिर्गोप्ता गौरोगव्यमयः खगः ॥ ६६॥

गणग्राहि गुणग्राही गगनो गह्वराश्रयः ।
अग्रगण्येश्वरो योगी खट्वाङ्गी गगनालयः ॥ ६७॥

अमोघो मोघफलदो घण्टारावो घटप्रियः ।
चन्द्रपीडश्चन्द्रमौलिश्चित्रवेशश्चिरन्तनः ॥ ६८॥

चतुःशयश्चित्रबाहुरचलश्छिन्नसंशयः ।
चतुर्वेदश्चतुर्बाहुश्चतुरश्चतुरप्रियः ॥ ६९॥

चामुण्डाजनकश्चक्षुश्चलचक्षुरचञ्चलः ।
अचिन्त्य महिमाचिन्त्यश्चराचर चरित्रगुः ॥ ७०॥

चन्द्रसञ्जीवनश्चित्र आचार्यश्च चतुर्मुखः ।
ओजस्तेजोद्युति धरोजित कामोजनप्रियः ॥ ७१॥

अजातशत्रुरोजस्वी जितकालो जगत्पतिः ।
जगदादिरजोजातो जगदीशो जनार्दनः ॥ ७२॥

जननोजन जन्मादिरार्जुनो जन्मविजयी ।
जन्माधिपोजटिर्ज्योतिर्जन्ममृत्युजरापहः ॥ ७३॥

जयोजयारि ज्योतिष्मान् जानकर्णो जगद्धितः ।
जमदग्निर्जलनिधिर्जटिलो जीवितेश्वरः ॥ ७४॥

जीवितान्तकरो ज्येष्ठो जगन्नाथो जनेश्वरः ।
त्रिवर्गसाधनस्तार्क्ष्यस्तरणिस्तन्तुवर्द्धनः ॥ ७५॥

तपस्वी तारकस्त्वष्टा तीव्रश्चात्मसंस्थितः ।
तपनस्तापसन्तुष्टश्चात्मयोनिरतीन्द्रियः ॥ ७६॥

उत्तारकस्तिमिरहातीव्रानन्दस्तनूनपात् ।
अन्तर्हितस्तमिश्रश्चस्तेजस्तेजोमयस्तुतिः ॥ ७७॥

तरुस्तीर्थङ्करस्त्वष्टातत्वन्तत्वविदुत्तमः ।
तेजोराशिस्तुम्बवीणस्त्वतिथिरतिथिप्रियः ॥ ७८॥

आत्मयोगसमान्मातस्तीर्थदेव शिलामयः ।
स्थानदः स्थापितः स्थाणुः स्थविष्टः स्थविरः स्थितः ॥ ७९॥

त्रिलोकेशः त्रिलोकात्मा त्रिशूलः त्रिदशाधिपः ।
त्रिलोचनः त्रयीवेद्यः त्रिवर्गस्थः त्रिवर्गदः ॥ ८०॥

दूरश्रवा दुष्कृतघ्नोदुर्द्धर्षो दुःसहोदयः ।
दृढपारी दृढोदेवो देवदेवोथ दुन्दुभः ॥ ८१॥

दीर्घायुधो दीर्घतपो दक्षोदुःस्वप्ननाशनः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरासदः ॥ ८२॥

दमो दमयिता दान्तो दातादानन्दयाकरः ।
दुर्वासाद्रिर्दैवकार्यो दुर्ज्ञेयो दुर्भगोदयः ॥ ८३॥

दण्डिदाहो दानवारिर्देवेन्द्रस्त्वरिमर्दनः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ ८४॥

देवासुरमहामन्त्रो देवासुरमहाश्रयः ।
देवाधिदेवो देवर्षि देवासुरवरप्रदः ॥ ८५॥

देवासुरेश्वरो देव्यो देवासुर महेश्वरः ।
सर्वदेवमयो दण्डो देवसिंहो दिवाकरः ॥ ८६॥

दम्भो दम्भोमहादम्भो दम्भकृद्दम्भमर्दनः ।
दर्पघ्नो दर्पदोदृप्तो दुर्जयो दुरतिक्रमः ॥ ८७॥

देवनाथो दुराधर्षो दैवज्ञो देवचिन्तकः ।
दक्षारिर्देवपालश्च दुःखदारिद्र्यहारकः ॥ ८८॥

अध्यात्मयोगरतो निरतो धर्मशत्रु धनुर्द्धरः ।
धनाधिपो धर्मचारी धर्मधन्वा धनागमः ॥ ८९॥

ध्येयोऽग्रधुर्यो धात्रीशो धर्मकृद्धर्मवर्द्धनः ।
ध्यानाधारो धनन्ध्येयो धर्मपूज्योऽथ धूर्जटिः ॥ ९०॥

धर्मधामा धनुर्धन्यो धनुर्वेदो धरातिपः ।
अनन्तदृष्टिरानन्दो नियमो नियमाश्रयः ॥ ९१॥

नलोऽनलो नागभुजो निदाघो नीललोहितः ।
अनादिमध्यनिधनो नीलकण्ठो निशाचरः ॥ ९२॥

अनघो नर्तको नेता नियतात्मा निजोद्भटः ।
ज्ञानन्नित्यप्रकाशात्मा निवृत्तात्मा नदीधरः ॥ ९३॥

नीतिः सुनीतिरुन्मत्तोऽनुत्तमस्त्व निवारितः ।
अनादिनिधनोऽनन्तो निराकारो नभोगतिः ॥ ९४॥

नित्यो नियतकल्याणोनगोनिःश्रेयसालयः ।
नक्षत्रमालिनाकेशो नागहारः पिनाकधृक् ॥ ९५॥

न्यायनिर्वाहको न्यायो न्यायगम्यो निरञ्जनः ।
निरावरणविज्ञानो नरसिंहो निपातनः ॥ ९६॥

नन्दीनन्दीश्वरो नग्नो नग्नब्रह्म धरोनरः ।
धर्मदो निरहङ्कारो निर्मोहो निरुपद्रवः ॥ ९७॥

निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्द्दनः ।
अनघो निष्कलो निष्ठो नीलग्रीवो निरामयः ॥ ९८॥

अनिरुद्धस्त्वनाद्यन्तो नैकात्मा नैककर्मकृत् ।
नगरेतानगीनन्दीत्यानन्दधनवर्द्धनः ॥ ९९॥

योगी वियोगी खट्वाङ्गी खड्गी शृङ्गीखरीगरी ।
रागी विरागी संरागी त्यागी गौरीवराङ्गदी ॥ १००॥

डमरूमरुक व्याघ्रहस्ताग्रश्चन्द्रखण्डभृत् ।
ताण्डवाडम्बररुचीरुण्डमुण्डनपण्डितः ॥ १०१॥

परमेश्वरः पशुपतिः पिनाकी पुरशासनः ।
पुरातनो देवकार्यः परमेष्ठी परायणः ॥ १०२॥

पञ्चविंशतितत्वज्ञः पञ्चयज्ञप्रभञ्जनः ।
पुष्करञ्च परम्ब्रह्मपारिजातः परात्परः ॥ १०३॥

प्रतिष्ठितः प्रमाणज्ञः प्रमाणम्परमन्तपः ।
पञ्चब्रह्मसमुत्पत्तिः परमात्मा परावरः ॥ १०४॥

पिनाकपाणिः प्रांशुश्चप्रत्ययः परमेश्वरः ।

प्रभाकरः प्रत्ययश्च प्रणवश्च पुरञ्जयः ॥ १०५॥

पवित्रपाणिः पापारिः प्रतापार्चिरपान्निधिः ।
पुलस्त्यः पुलहोगस्त्यो पुरुहूतः पुरुष्टुतः ॥ १०६॥

पद्माकरः परञ्ज्योतिः परापरफलप्रदः ।
परापरज्ञः परदः परशत्रुः परम्पदः ॥ १०७॥

पूर्णः पूरयितापुण्यः पुण्यश्रवणकीर्तनः ।
पुरन्दरः पुण्यकीर्तिः प्रमादी पापनाशनः ॥ १०८॥

परशीलः परगुणः पाण्डुरागपुरन्दरः ।
परार्थवृत्तिः प्रभवः पुरुषः पूर्वजः पिता ॥ १०९॥

पिङ्गलः पवनः प्रेक्षः प्रतप्तः पूषदन्तहा ।
परमार्थगुरुः प्रीतः प्रीतिमांश्च प्रतापनः ॥ ११०॥

पराशरः पद्मगर्भः परः परपुरञ्जयः ।
उपद्रवः पद्मकरः परमार्थैक पण्डितः ॥ १११॥

महेश्वरो महादेवो मुद्गलो मधुरोमृदुः ।
मनःशायी महायोगी महाकर्मा महौषधम् ॥ ११२॥

महर्षिः कपिलाचार्यो मृगव्याधो महाबलः ।
महानिधिर्महाभूतिर्महानीतिर्महामतिः ॥ ११३॥

महाह्रदो महागर्तो महाभूतो मृतोपमः ।
अमृतांशोमृतवपुर्मरीचिर्महिमालयः ॥ ११४॥

महातमो महाकायो मृगबाणार्पणोमलः ।
महाबलो महातेजो महायोगी महामनः ॥ ११५॥

महामायो महासत्वो महानादो महोत्सवः ।
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ॥ ११६॥

उन्मत्तकीर्तिरुन्मत्तो माधवीनमितोमतिः ।
महाशृङ्गोऽमृतोमन्त्रो माङ्गल्यो मङ्गलप्रियः ॥ ११७॥

अमोघदण्डो मध्यस्छोमहेन्द्रोऽमोघविक्रमः ।
अमेयोऽरिष्टमथनो मुकुन्दस्त्वमयाचलः ॥ ११८॥

मातामहो मातरिश्वा मणिपूरो महाशयः ।
महाश्रयो महागर्भो महाकल्पो महाधनुः ॥ ११९॥

मनो मनोजवो मानी मेरुमेद्यो मृदोमनुः ।
महाकोशो महाज्ञानी महाकालः कलिप्रियः ॥ १२०॥

महाबटुर्महात्यागी महाकोशोमहागतिः ।
शिखण्डी कवची शूली जटी मुण्डी च कुण्डली ॥ १२१॥

मेखली कञ्चुकी खड्गी माली मायी महामणिः ।
महेष्वासो महीभर्ता महावीरो महीभूजः ॥ १२२॥

मखकर्ता मखध्वंसी मधुरो मधुरप्रियः ।
ब्रह्मसृष्टिर्ब्रह्मवीर्यो बाणहस्तो महाबली ॥ १२३॥

कालरूपो बलोन्मादी ब्रह्मण्यो ब्रह्मवर्चसी ।
बहुरूपो बहुमायो ब्रह्माविष्णुशिवात्मकः ॥ १२४॥

ब्रह्मगर्भो बृहद्गर्भो बृहज्ज्योतिर्बृहत्तरः ।
बीजाध्यक्षो बीजकर्ता बीजाङ्गो बीजवाहनः ॥ १२५॥

ब्रह्म ब्रह्मविदो ब्रह्मज्योतिर्बृहस्पतिः ।
बीजबुद्धि ब्रह्मचारी ब्रह्मण्यो ब्राह्मणप्रियः ॥ १२६॥

युगादिकृद्युगावर्तो युगाध्यक्षो युगापहा ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १२७॥

योगाचार्यो योगगम्यो योगी योगश्चयोगवित् ।
योगाङ्गो योगसारज्ञो यक्षोयुक्तिर्यमोयमी ॥ १२८॥

रौद्रो रुद्र ऋषी राहू रुचिर्त्वं रणप्रियः ।
अरोगो रोगहारी च रुधिरो रुचिराङ्गदी ॥ १२९॥

लोहिताक्षो ललाटाक्षो लोकदो लोककारकः ।
लोकबन्धुर्लोकनाथो लक्षण ज्ञोथलक्षणः ॥ १३०॥

लोकमायो लोककर्ता लौल्यो ललित एव च ।
वरीयानू वरदो वन्द्यो विद्वान् विश्वामरेश्वरः ॥ १३१॥

वेदान्तसारसन्देहो वीतरागो विशारदः ।
विश्वमूर्तिर्विश्ववेद्यो वामदेवो विमोचकः ॥ १३२॥

विश्वरूपो विश्वपक्षो वागीशो वृषवाहनः ।
वृषाङ्कोथ विशालाक्षो विश्वदीप्तिर्विलोचनः ॥ १३३॥

विलोको विश्वदृग्विश्वोविजितात्मालयः पुमान् ।
व्याघ्रचर्मधरोवाङ्गी वाङ्मयैकविधिर्विभुः ॥ १३४॥

वर्णाश्रम गुरुवर्णी वरदो वायुवाहनः ।
विश्वकर्मा विनीतात्मा वेदशास्त्रार्थ तत्ववित् ॥ १३५॥

वसुर्वसुमना व्यालो विरामो विमदः कविः ।
विमोचकश्चविजयो विशिष्टो वृषवाहनः ॥ १३६॥

विद्येशो विबुधो वादी वेदाङ्गो वेदविन्मुतिः ।
विश्वेश्वरो वीरभद्रो वीरासन विधिर्विराट ॥ १३७॥

व्यवसायो व्यवस्छानः वीरचुडामणिर्वरः ।
वालखिल्यो विश्वदेहो विरामो वसुदोवसुः ॥ १३८॥

विरोचनो वररुचिर्वेद्यो वाचस्पतिर्गतिः ।
विद्वत्तमोवीतभयो विश्रुतिर्विमलोदयः ॥ १३९॥

वैवस्वतो वसिष्ठश्च विभूतिर्विगतज्वरः ।
विश्वहर्ता विश्वागोप्ता विश्वामित्रो द्विजेश्वरः ॥ १४०॥

विश्वोत्पत्तिर्विश्वसहो विश्वावासो वसुश्रवाः ।
विश्वरूपो वज्रहस्तो विपाको विश्वकारकः ॥ १४१॥

वृषदर्श्वो व्यासकल्पो विशल्पो लोकशल्यहृत् ।
विरूपो विकृतो वेगी विरञ्चिर्विष्टरश्रवाः ॥ १४२॥

अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विशाम्पतिः ।
विबुद्धोऽग्रकरो वेदो विश्वगर्भो विचक्षणः ॥ १४३॥

विष्माक्षो विलोमाक्षो वृषभो वृषवर्द्धनः ।
वित्तप्रदो वसन्तश्च विवस्वान् विक्रमोत्तमः ॥ १४४॥

वेद्यो वैद्यो विश्वरूपो विविक्तो विश्वभाजनम् ।
विषयस्छो विविक्तस्छो विद्याराशिर्वियत्प्रियः ॥ १४५॥

शिवः सर्वः सदाचारः शम्भुरीशान ईश्वरः ।

श्रुतिधर्मानसंवादी सहस्राक्षः सहस्रपात् ॥ १४६॥

सर्वज्ञः सर्वदेवश्च शङ्करः शूलधारकः ।
सुशरीरः स्कन्दगुरुः श्रीकण्ठः सूर्यतापनः ॥ १४७॥

ईशानो निलयः स्वस्ति सामवेदस्त्वथर्ववित् ।
नीतिः सुनीतिः श्रद्धात्मा सोमः सोमतरः सुखी ॥ १४८॥

सोमपामृतपः सौम्यः सूत्रकारः सनातनः ।
शाखो विशाखो सम्भाव्यः सर्वदः सर्वगोचरः ॥ १४९॥

सदाशिवः समावृत्तिः सुकीर्तिः स्छिन्नसंशयः ।
सर्वावासः सदावासः सर्वायुधविशारदः ॥ १५०॥

सुलभः सुव्रतः शूरः शुभाङ्गः शुभविग्रहः ।
सुवर्णाङ्गः स्वात्मशत्रुः शत्रुजिछत्रुतापनः ॥ १५१॥

शनिः सूर्यः सर्वकर्मा सर्वलोकप्रजापतिः ।
सिद्धः सर्वेश्वरः स्वस्ति स्वस्तिकृत्स्वस्ति भूस्वधा ॥ १५२॥

वसुर्वसुमनासत्यः सर्वपापहरोहरः ।
सर्वादिः सिद्धिदः सिद्धिः सत्वावासःश्चतुष्पथः ॥ १५३॥

संवत्सरकरः श्रीमान् शान्तः संवत्सरः शिशुः ।
स्पष्टाक्षरः सर्वहारी सङ्ग्रामः समराधिकः ॥ १५४॥

इष्टोविशिष्टः शिष्टेष्टः शुभदः सुलभायनः ।
सुब्रह्मण्यः सुरगणो सुशरण्यः सुधापतिः ॥ १५५॥

शरण्यः शाश्वतः स्कन्दः शिपिविष्टः शिवाश्रयः ।
संसारचक्रभृत्सारः शङ्करः सर्वसाधकः ॥ १५६॥

शस्त्रं शास्त्रं शान्तरागः सवितासकलागमः ।
सुवीरः सत्पथाचारः षड्विंशः सप्तलोकधृक् ॥ १५७॥

सम्राट् सुवेषः शत्रुघ्नोऽसुरशत्रुः शुभोदयः ।
समर्थः सुगतः शक्रः सद्योगी सदसन्मयः ॥ १५८॥

शास्त्रनेत्रं मुखं श्मश्रु स्वाधिष्ठानं षडाश्रयः ।
अभूः सत्यपतिर्वृद्धः शमनः शिखिसारथिः ॥ १५९॥

सुप्रतीकः सुवृद्धात्मा वामनः सुखवारिधिः ।
सुखानीडः सुनिष्पन्नः सुरभिः सृष्टिरात्मकः ॥ १६०॥

सर्वदेवमयः शैलः सर्वशस्त्रप्रभञ्जनः ।
शिवालयः सर्वरूपः सहस्रमुखनासिका ॥ १६१॥

सहस्रबाहुः सर्वेषां शरण्यः सर्वलोकधृक् ।
इन्द्रेशः सुरसव्यासः सर्वदेवोत्तमोत्तमः ॥ १६२॥

शिवध्यानरतः श्रीमान् शिखिश्री चण्डिकाप्रियः ।
श्मशाननिलयः सेतुः सर्वभूतमहेश्वरः ॥ १६३॥

सुविशिष्टः सुराध्यक्षः सुकुमारः सुलोचनः ।
सकलः स्वर्गतः स्वर्गः सर्गः स्वरमयः स्वनः ॥ १६४॥

सामगः सकलधारः सामगानप्रियः शिचिः ।
सद्गतिः सत्कृतिः शान्तसद्भूतिः सत्परायणः ॥ १६५॥

शुचिस्मितः प्रसन्नात्मा सर्वशस्त्रमृतांवरः ।
सर्वावासः स्तुतस्त्वष्टा सत्यव्रतपरायणः ॥ १६६॥

श्रीवल्लभः शिवारम्भः शान्तभद्रः सुमानसः ।
सत्यवान् सात्विकः सत्यः सर्वजिच्छ्रुतिसागरः ॥ १६७॥

सहस्रार्चिः सप्तजिह्वः सप्तावर मुनीश्वरः ।
संसारसारथिः शुद्धः शत्रुघ्नः शत्रुतापनः ॥ १६८॥

सुरेशः शरणं शर्म सर्वदेवः सताङ्गतिः ।
सद्वृत्तोव्रतसिद्धिश्च सिद्धिदः सिद्धिसाधनः ॥ १६९॥

शान्तबुद्धिः शुद्धबुद्धिः स्रष्टास्तोऽतास्तवप्रियः ।
रसज्ञः सर्वसारज्ञः सर्वसत्वावलम्बनः ॥ १७०॥

स्थूलः सूक्ष्मः सुसूक्ष्मश्च सहस्राक्षः प्रकाशकः ।
सारमेयानुगः सुभ्रूः प्रौढबाहुः सहस्रदृक् ॥ १७१॥

गृहात्मको रुद्ररूपी वषट् स्वरमयः शशी ॥

आदित्यः सर्वकर्त्ता च सर्वायुः सर्वबुद्धिदः । १७२॥

संहृष्टस्तुसदापुष्टो घुर्घुरो रक्तलोचनः ।

पादुकासिद्धिदः पाता पारुष्य विनिषूदनः ॥ १७३॥

अष्टसिद्धिर्महासिद्धिः परः सर्वाभिचारकः ।
भूतवेतालघाती च वेतालानुचरोरविः ॥ १७४॥

कालाग्निः कालरुद्रश्च कालादित्यः कलामयः ।
कालमाली कालकण्ठस्त्र्यम्बकस्त्रिपुरान्तकः ॥ १७५॥

सर्वाभिचारीहन्ता च तथा कृत्यानिषूदनः ।
आन्त्रमाली घण्टमाली स्वर्णाकर्षणभैरवः ॥ १७६॥

नाम्नां सहस्रं दिव्यानां भैरवस्य महात्मनः ।
मया ते कथितं देवि रहस्यं सर्वकामदम् ॥ १७७॥

भैरवस्य वरारोहे वरं नामसहस्रकम् ।
पठते पाठयेद्यस्तु श्रुणुयात्सु समाहितः ॥ १७८॥

न तस्य दुरितं किञ्चिन्नमारी भयमेवच ।
न च भूतभयं किञ्चिन्न रोगाणां भयं तथा ॥ १७९॥

न पातकाद्भयं चैव शत्रुतो न भयं भवेत् ।
मारीभयं चोरभयं नाग्निव्याघ्रादिजं भयम् ॥ १८०॥

औत्पातिकं महाघोरं पठते यो विलीयते ।
दुःस्वप्नजे राजभये विपत्तौ घोरदर्शने ॥ १८१॥

स्तोत्रमेतत्पठेद्विद्वान्सर्वदुःखौघनाशनम् ।
सर्वप्रशममायाति सहस्रपरिकीर्तनात् ॥ १८२॥

एककालं द्विकालं वा त्रिकालमथवानिशी ।
पठेद्यो नियताहारः सर्वसिद्धि च विन्दति ॥ १८३॥

भूमिकामो भूतिकामः षण्मासं च जपेत्सुधीः ।
प्रतिकृत्या विनाशार्थं जपेत्रिशतमुत्तमम् ॥ १८४॥

मासत्रयेण सर्वेषां रिपूणामन्तको भवेत् ।
मासत्रयं जपेद्देवि निशिनिश्चलमानसः ॥ १८५॥

धनं पुत्रान् तथादारान् प्राप्नुयान्नात्र संशयः ।
महाकारागृहे बद्धपिशाचैः परिवारितः ॥ १८६॥

निगडैः शृङ्खलाभिश्च बन्धनं परमं गतः ।
पठेद्देवि दिवारात्रौ सर्वान्कामान्नवाप्नुयात् ॥ १८७॥

शतमावर्तनाद्देवि पुरश्चरणमुच्यते ।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥ १८८॥

सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
सर्व कामः प्रदो देवि भैरवः सर्वसिद्धिदः ॥ १८९॥

सत्कुलीनाय शान्ताय ऋषये सत्यवादिन ।
स्तोत्रदानात्सु प्रहृष्टो भैरवोभून्महेश्वरः ॥ १९०॥

॥ इतिश्रीउड्डामरेतन्त्रे उमामहेश्वर संवादे
कालभैरवसहस्रनामस्तोत्रं सम्पूर्णम् ॥

Encoded and Proofread by Ravin Bhalekar ravibhalekar@hotmail.com

---

*Kalabhairava sahasranAma stotram*

pdf was typeset on December 25, 2019

Please send corrections to *sanskrit@cheerful.com*

